கவலையில் கலங்கியவர்கள், கவலையால் நிலைதடுமாறிய வர்கள் सेत्स्यति - நிறைவேறப் போகிறது लब्धाश्वासः - ஆறுதலடைந்தவனாக.

பயிற்சி – பிரிந்துள்ள சொற்களைச் சேர்த்து ஸந்தியின் பெயரைக் குறிப்பிடவும். ஸந்தியடைந்துள்ள சொற்களைப் பிரித்து எழுதவும்.

# नवमः पाठः

## बृहत्कथा-२

## शर्ववर्मा जितवान्

शर्ववर्मा चिन्ताक्रान्तः ज्ञानगुरुं कुमारदेवमेव तपसाऽऽराध्य प्रतिज्ञां पूरयितुं इयेष। तस्यामेव रात्रावलक्षितो नगरान्निर्गत्य देवगिरिमभिययौ। मौनी धृतोपवासः अध्वश्रान्तः मनाक्शेषे मार्गे निःसंज्ञो भूमौ पपात। मूर्च्छितस्य तस्य अभिमुखं प्रसन्नो भगवान् स्कन्दः। "तपसा सर्वं संपत्स्यते" इत्याह। तेन जातविश्रंभः तीव्रं तपश्चचार शर्ववर्मा। सन्तुष्टो भगवान् स्कन्दः पाणिनीयादपि लघुतरं व्याकरणं उपदेष्टुं पुरतो बभूव। वाग्देव्येव साक्षात् तन्मुखं प्रविष्टा आसीत्।

भगवान् स्कन्दः स्वोपज्ञस्य व्याकरणस्य आदिमं सूत्रं "सिद्धो वर्णसमाम्नायः" इति उदैरयत्। अनुपदमेव स्वमनसि प्रतिभातं द्वितीयं सूत्रं शर्ववर्मा स्वयं उदैरयत्। तत् श्रुत्वा भगवान् अब्रवीत्, 'एवं रभसतया त्वं मां स्वयं नावदिष्यो यदि, शास्त्रमिदं पाणिनीयस्य व्याकरणस्य उपमर्दकं अभविष्यत्। अधुना तु स्वल्पतन्त्रत्वात् कातन्त्रं एतद् भविष्यति। मम वाहनकलापस्य नाम्ना कालापकं इत्याख्यास्यते। भवतु। तात्कालिकं यशो लभस्व।" इत्यनुगृह्य अन्तरधात्। शर्ववर्मा कृतार्थोऽपि अकृतार्थ इव

प्रतिष्ठानं निववृते। राजा सबहुमानं तं प्रत्युज्जगाम। सः कार्तिकेयप्रसादेन सातवाहनं यथाप्रतिज्ञातं संस्कृतभाषाप्रवीणं अकरोत्।

राजा सभायां संस्कृतभाषायामेव व्यवहारं चक्रे। कवीन् सोऽभ्यनन्दत्। स्वयं कविभिश्च अभिनन्दितो बभूव। गुणाढ्यस्तु ग्लहे पराजितः त्यक्तभाषात्रयः, न केनापि व्यवहर्तुं शक्नुवानः, अनिच्छन्तमपि राजानं प्रणामेनैव आमन्त्र्य नगरात् निर्ययौ।

**कुमारदेवः** - குமரக்கடவுள் **इयेष** - விரும்பினுன் **पूरयितुं** - நிறைவேற்றுவதற்கு **अलक्षितः** - (பிறரால்) காணப்படாதவனுக **देवगिरिं अभि** - தேவகிரியை நோக்கி (தேவகிரி முருகனின் க்ஷேத்திரம்) **धृतोपवासः** - பட்டினியை மேற்கொண்டவனுக **अध्वश्रान्तः** - வழிநடையால் களைத்தவனுக **मनाक्शेषे** - சிறிது மீதமிருக்கும்போது **संपत्स्यते** - நிறைவேறப் போகிறது **जातविश्रंभः** - நம்பிக்கை உண்டானவனுக **स्वोपज्ञं** -தன்னையே மூலபுருஷனுகக் கொண்ட **आदिमं** - முதலாவதான **अनुपदमेव**- உடனேயே- அடியைத்தொடர்ந்து **प्रतिभातं** - தோன்றிய **रभसतया** - அவஸரக்காரனுயிருப்பதால், அவஸரத் தன்மையால் **न अवदिष्यो यदि**- சொல்லாமலிருந்திருப்பாயேயானுல் **पाणिनीयस्य व्याकरणस्य उपमर्दकं** - பாணினீய இலக்கணத்தை வெல்லத் தக்கதாக, அதற்குச்சவால் விடக்கூடியதாக **कलापः** - மயில்தோகை **आख्यास्यते**- புகழ்ந்து சொல்லப்படப் போகிறது **तात्कालिकं** - தாற்காலிகமான, நிலையற்ற **अकृतार्थः**-எண்ணம் ஈடேருதவனுக **प्रत्युज्जगाम** எதிர்கொண்டு வரவேற்ருன் **व्यवहारः** - பேசிப்பழகுதல் **ग्लहः** - பந்தயம் **अशक्नुवानः** - சக்தியற்றவனுக **अनिच्छन्तं अपि**- விரும்பாமல் இருந்தபோதிலும் **आमन्त्र्य**- விடைதரச்செய்து **निर्ययौ**- வெளியேறினுன்.

# दशमः पाठः

# बृहत्कथा - ३

## गुणाढ्योऽपि शापात् मुक्तः

गुणाढ्यस्य बहवः शिष्याः । तेषु द्वौ प्रियतमौ । तौ विपद्यपि तं अन्वसरताम् । गुणाढ्यः नगरात् नगरं, ग्रामात् ग्रामं गच्छन् विन्ध्याटवीं शरणं अगच्छत् । श्रान्तः तस्मिन् आलय एव सुष्वाप । देवी तं स्वप्ने एवं समादिशत् । गुणाढ्य ! समीप एव पिशाचैः परिवृतः काणभूतिः वसति । तं उपगच्छ । तदैव तव पूर्वजन्मस्मरणं भविष्यति । तदा कर्तव्यं यत् तत् अनुष्ठाय विशोको भविष्यसि ।'' इति ।

सुप्तोत्थितः गुणाढ्यः विस्मयं प्राप । इतस्ततः विचरन् काणभूतेः आवसथं न अजानात् । ततः पुलिन्दानां मुखात् कथंचित् पिशाचावासं अजानात् । तत्र आगतः दूरादेव पिशाचानां कोलाहलेन भाषणं अशृणोत् । मेधावी अयं संभाषणं सावधानेन शृण्वन्, अर्भक इव वृद्धभाषितं, तेषां भाषामपि अधीतवान् ।

ततः शनैः तेषां समीपं आगत्य ''काणभूतिः कुत्र वर्तते ?'' इति अपृच्छत् । ते तं अवदन् ''नेता काणभूतिः स्वसुहृदं भूतिवर्माणं द्रष्टुं उज्जयिनीं गतवान् । द्वित्रैः दिनैः आयास्यति । यदि तं द्रष्टुं इच्छसि, अत्रैव वस'' इति । सोऽपि तस्य आगमनं प्रतीक्षमाणः तत्रैव तस्थौ ।।

अत्रान्तरे भूतिवर्मणो दर्शनाय गतः काणभूतिः उज्जयिन्याः निववृते । दिव्यदृष्ट्या स्वाश्रमे समागतं अतिथिं कमपि दिव्यपुरुषं अजानात् । ततः सत्वरं प्रत्यागच्छन् स्वावासस्य उपान्ते चरन्तं तं अतितेजसं अतिथिं अपश्यत्, स्वागतं व्याजहार । गुणाढ्यः तं दृष्ट्वैव जातिस्मरो बभूव । काणभूतये स्वस्य शापप्राप्तिं, गुणाढ्यनाम्ना जननं,

शर्ववर्मणः प्राप्तं पराभवं, ततः भाषात्रयपरित्यागं, अन्ते काणभूतेः आवासे लब्धं पिशाचभाषापरिचयं क्रमेण न्यवेदयत्।

काणभूतिरपि आत्मनो वृत्तान्तं आदितः तस्मै अकथयत् । वररुचिनाम्ना कात्यायनेन समागमं, तन्मुखात् कथाश्रवणं, पिशाचभावात् प्रायो लब्धं विमोचनं, अन्ते कात्यायनेन कृतं सन्देशं च विस्तरेण अकथयत्। गुणाढ्यः तां कथां कथयितुं काणभूतिं प्रार्थितवान्। काणभूतिः तस्मै तां कथां पिशाचभाषया अकथयत्। पिशाचा अपि परितः उपविष्टाः तां अशृण्वन्। सप्तलक्षग्रन्थपरिमिता सा बृहती कथा । तां कथां गुणाढ्यः वने मष्याः अभावात् स्वशोणितेनैव शीर्णेषु पत्रेषु सप्तभिः वर्षैः विलिलेख। तां कथां श्रोतुकामाः सिद्धाः विद्याधराश्च आकाशे परिवर्तमानाः वितानमिव निर्मान्ति स्म। कथायां समाप्तायां काणभूतिः निश्शेषं शापात् मुक्तो बभूव।।

विपद्यपि-विपदि अपि- ஆபத்திலகூட अन्वसरतां-பின் தொடர்ந்தார்கள் प्राप-அடைந்தான் सुष्वाप-தூங்கினான் समादिशत्-உத்தரவிட்டான் उपगच्छ-அணுகுவாய் अनुष्ठाय-செய்துவிட்டு विशोकः-வருத்தமற்றவனாக सुप्तोत्थितः-தூங்கி எழுந்த आवसथं-இருக்கை, குடியிருப்பு अजानात्-அறிந்தான் पुलिन्दः-வேடன், வனவாசி अशृणोत्-கேட்டான் सावधानं-கவனத்துடன் शृण्वन्-கேட்டவனாக अर्भकः-சிறுவன் वृद्धभाषितं - பெரியோர் பேச்சு अधीतवान् - கற்றான் नेता-தலைவர் आयास्यति-வருவார் अत्रान्तरे-இதனிடையில் निववृते-திரும்பினார் दिव्यदृष्ट्या-ஞானக்கண்ணால் सत्वरं-வேகமாக उपान्ते-அருகே स्वागतं-நல்வரவு व्याजहार-கூறினார் जातिस्मरः-முன்பிறவியை நினைத்தவராக पराभवः-தோல்வி परिचयः-பழக்கம் सन्देशः-செய்தி परितः-சுற்றிலும் उपविष्टाः-உட்கார்ந்தவர்களாக अशृण्वन्-கேட்டார்கள் मषी-மை शोणितं-ரத்தம் शीर्ण-உதிர்ந்த पत्र-இலை श्रोतुकामः-கேட்க விரும்பிய विलिलेख-எழுதினார் परिवर्तमानाः-சூழ்ந்து நிற்கின்ற वितानमिव निर्मान्ति स्म-பந்தலை அமைத்தார்கள் போலும்.

# एकादशः पाठः

## बृहत्कथा - ४

## बृहत्कथा संपन्ना

कथा समाप्ता। काणभूतिः शापात् मुक्तः। पिशाचाश्च सर्वे स्वर्गं अगच्छन्। गुणाढ्यः अचिन्तयत्- "कथं कथां एनां प्रतिष्ठापयेयम्? शापात् मुक्तश्च स्याम्" इति। तस्य शिष्यौ तं अवदताम् "गुरो! चिन्तायाः अवकाशो नैव। सातवाहनो राजा अस्माकं चिरपरिचितः। महान् रसिकश्च। पत्रबद्धा इयं कथा। अतः आवां इमां कथां तस्मै वाचयावः। ततः स सर्वत्र प्रचारं गमिष्यति" इति। तथा सातवाहनं उपसृत्य "गुणाढ्यकृतिः एतत् काव्यं" इति अदर्शयताम्। विद्यामदान्धस्तु सातवाहनः 'प्रमाणं सप्तलक्षाणि! पैशाचं नीरसं वचः! शोणितेन अक्षरन्यासः!!! धिक् पिशाचकथामिमाम्!! इत्यगर्हत। शिष्यौ खिन्नौ प्रतिनिवृत्त्य गुरवे सर्वं न्यवेदयताम्। विषण्णो गुणाढ्यः नातिदूरे शिलोच्चये महान्तं अग्निकुण्डं निर्ममे। तस्य पुरतः उपविश्य पत्रं एकैकशः वाचयन् अग्नौ प्राक्षिपत्। शिष्यौ साश्रुनेत्रौ तं तथा कुर्वाणं अवेक्षमाणौ अतिष्ठताम्। मृगाः पक्षिणश्च त्यक्ताहारनिद्राः अद्भुततमां कथां अशृण्वन् अहोरात्रम्।

अत्रान्तरे राजा सातवाहनः अस्वस्थो बभूव। वैद्याः तं परीक्ष्य शुष्कमांसाशनं रोगहेतुं अवदन्। कुतः शुष्कं मांसम्? इति जिज्ञासा प्रवृत्ता। पुलिन्दः राजानं अवदत् "देव! द्विजः कश्चित् कुतोऽपि समागतः हस्तगतं पत्रं एकैकं पठित्वा अग्नौ प्रक्षिपति। तस्य श्रवणे आसक्ताः मृगाः पक्षिणश्च त्यक्ताहाराः। अतः तेषां मांसं शुष्कम्" इति। अद्भुतं एतत् श्रुत्वा राजा तानेव अग्रतः कृत्वा गुणाढ्यस्य अन्तिकं आययौ। तत्र गुणाढ्यः सबाष्पं परितः स्थितैः मृगैः, वृक्षशाखासु उपविष्टैश्च पक्षिभिः परिवृतः ददृशे। तं कथञ्चित् प्रत्यभिज्ञाय पादयोः प्रणनाम। तस्य वृत्तान्तं च अपृच्छत्।

गुणाढ्यः पिशाचभाषयैव प्रत्यवदत् । पुष्पदन्तस्य शापं, कथावतारं, काणभूतेः शापात् मोक्षं च यथावद् अवदत् । पश्चात्तप्तो राजा सर्वां कथां कथयितुं तं प्रार्थयत। गुणाढ्यः अवदत्- "राजन् ! एकैकं लक्षग्रन्थपरिमिताः षट् कथाः मया अग्नौ प्रक्षिप्ताः । अन्ते एका लक्षग्रन्थपरिमिता कथा अवशिष्टा । तां गृहाण । पिशाचभाषागतां तां मच्छिष्यौ एतौ संस्कृते व्याख्यास्यतः ।" इति वदन्नेव शापान्मुक्तः शरीरं परित्यज्य दिव्यं पदं जगाम । राजा तां कथां तौ च गुणाढ्यशिष्यौ सादरं नगरं आनयत् । सैषा वृहत्कथा नाम। कथासरित्सागरे एषा कथा सङ्गृहीता वर्तते। तां पठत।

प्रतिष्ठापयेयं- *மக்களிடையே பரப்பி நிலைநாட்டுவேன்* चिरपरिचितः- *வெகுநாட்களாகப்பழக்கப்பட்டவன்* पत्रबद्धा- *இலைகளில எழுதித்தொகுக்கப்பட்டது* वाचयावः-*வாசித்துக் காட்டுகிறோம்* कृतिः- *இயற்றப்பட்ட நூல்* विद्यामदान्धः *கல்விச்செருக்கால் குருடான* प्रमाणं-*அளவு* नीरसं-*சுவையற்றது* पैशाचं वचः- *பிசாசபாஷையில் அமைந்த சொல் வடிவம்* शोणितेन अक्षरन्यासः- *ரத்தத்தால் எழுத்துப்பதிவு* धिक्-*தூர எறி* अगर्हत- *அவமதித்தான். நிந்தித்தான்* खिन्नौ-*வேதனை அடைந்தவர்களாக* न्यवेदयतां-*தெரிவித்தார்கள்* विषण्णः-*வருத்தத்தால் தளர்ந்த* शिलोच्चये-*கல்மேடையில்* एकैकशः-*ஒவ்வொன்றாக* वाचयन्-*வாசித்துக்காட்டுபவனாக* प्राक्षिपत्-*போட்டான்* साश्रु-नेत्रौ- *கண்ணீருள்ள கண்கள் உள்ளவர்களாக* तथा कुर्वाणं तं-*அவ்வாறு செய்து கொண்டிருக்கிற அவரை* त्यक्त-आहार-निद्राः- *உணவையும் தூக்கத்தையும் விட்டவர்(வை)களாக* अस्वस्थः- *உடல் நலமற்றவன்* शुष्कमांसाशनं - *உலர்ந்த சாரமற்ற மாமிசத்தாலான உணவு* ददृशे-*காணப்பட்டான்* जिज्ञासा - *ஆராய்வு* प्रत्यभिज्ञाय - *கண்டுகொண்டு* कथावतारः - *கதையின் தோற்றுவாய்* पश्चात्तापः - *பச்சாத்தாபமடைந்த* अवशिष्टा - *மீந்து உள்ளது* व्याख्यास्यतः- *விளக்கிக் கூறுவர்* बृहत्कथा - *பெருங்காதை (தமிழிலும் இந்நூல் உண்டு.)*

# द्वादशः पाठः

## तेनालिरामः- १

## देव्या अनुग्रहः ।

विजयनगरसाम्राज्यं—आसेतोराहिमाचलं आततवितते अखण्डभारते आङ्गलशासनात् पूर्वं बहूनि साम्राज्यान्यासन् । समर्थैः शास्तृभिः स्थापितानि विख्यातानि तानि तद्वंश्यैः दुर्बलैरवनतिं प्रापितानि विनष्टानि च । मौर्यसाम्राज्यं कनिष्कसाम्राज्यं गुप्तसाम्राज्यं हर्षसाम्राज्यं इत्यादीनि वयं जानीमः । तेष्वन्यतमं विजयनगरसाम्राज्यम् ।

तुङ्गभद्रायाः दक्षिणे तीरे सङ्गमनाम्नो नृपतेः पुत्रौ भ्रातरौ हरिहरो बुक्कश्च विजयनगरसाम्राज्यस्थापकौ । यथा मौर्यसाम्राज्यस्थापकस्य चन्द्रगुप्तस्य चाणक्यः साम्राज्यनिर्वाहप्रदर्शको गुरुश्च, यथा वा महाराष्ट्रराज्यस्थापकस्य वीरच्छत्रपतिशिवाजेः समर्थरामदासः, तथैव हरिहरस्य तदनुजस्य बुक्कस्य च श्रीविद्यारण्यो राज्यनिर्वाहमार्गप्रदर्शको गुरुश्चासीत् ।

क्रिस्तोः परं चतुर्दश्यां शताब्द्यां १३५६ तमे वर्षे हरिहरबुक्काभ्यां स्थापितं इदं राज्यं, षोडश्यां शताब्द्यां १५६५ तमे वत्सरे मुगलानां वशङ्गतं ननाश । तस्य खण्डहराः अद्यापि हम्पीसमीपे दृश्यन्ते ।

हरिहरः तदनु बुक्कः ततः परं देवरायश्च साम्राज्यं निरवहन् । अनन्तरं कृष्णदेवरायः प्रख्यातो राजा बभूव । तस्य शासनकाले (१५०९ AD तः १५२९ AD पर्यन्तं) साम्राज्यं महतीमभ्युन्नतिं प्राप । तस्य मन्त्रिसभायां अष्टदिग्गजा इति प्रसिद्धाः मन्त्रिणः आसन् । तेनालिराम इति प्रसिद्धो विकटकविश्च तस्य सभायामासीत् । तस्य कथामधुना पठामः ।

तेनालिरामस्य वैदुष्यप्राप्तिः - विजयनगर साम्राज्यान्तर्गतः कश्चित्प्रदेशः तेनालीति। तत्रैको ब्राह्मणकुमारो रामलिङ्गनामा बभूव। राम इत्यपि तमाह्वयन्ति । बाल्य एव पित्रा हीनोऽलसो मातुः संरक्षणेऽपि अनासक्तोऽसौ कदाचित् कुत्रापि तरुतले शयानः कालमनयत्। महात्मा कश्चित् तमुपेत्य पप्रच्छ- "बालक ! कस्त्वम् ? कुतस्तेषु तेषु यथासम्भवं परिश्राम्यत्सु कर्तव्यपरेषु, त्वमेवं तरुतले शेषे इति।

बालः प्रत्यवदत्— "स्वामिन् ! दरिद्रो यथाकालमभुञ्जानो दुर्बलः किं वा कुर्याम् ?" इति। तस्मिन् दयमानो महान् मन्त्रमेकाक्षरं एकं तस्मै उपदिश्य " महाकालीमन्दिरे सन्निहितेऽद्यैव रात्रौ शतसहस्रवारं जप । देवी प्रसन्ना पुरतः आगत्य त्वामनुग्रहीष्यति" इति कथयित्वा यथागतं ययौ ।

प्रकृत्या बुद्धिमान् बालः रामः स्नात्वा महाकालीमन्दिरं गत्वा प्राङ्गणे समुपविष्टः तस्यामेव रात्रौ महात्मनोपदिष्टं मन्त्रं एकाग्रमनाः लक्षकृत्वो जजाप । जपावसाने प्रत्यक्षीभूता सहस्रमुखी मुण्डमालाधरा लोलजिह्वा कटिविन्यस्तभुजा देवी काली पुरतस्तिष्ठन्ती "बालक ! प्रसन्नास्मि। वरं दातुमुपस्थिता। वरं वृणीष्व" इत्यब्रवीत्।

निसर्गतो विनोदशीलः तेनालिरामः। तां पश्यत एव तस्य मनसि अकाण्डे कोऽपि विस्मयपरिहासमिश्रितो भावः उदभूत् । सः उच्चैः मुक्तकण्ठं जहास। एवंरूपं तस्याविनयं दृष्ट्वा काली चुकोप। "दुर्ललित ! अलं हासेन ! वरं दातुं उपस्थितायां मयि तवेदृशोऽविनयः ?" इत्यब्रवीत्।

बालको बद्धाञ्जलिः प्रत्यब्रवीत्— "मातः ! क्षमस्व माम् । ममैकं मुखं, तत्रैका नासिका । यदि सा पीनसेनाक्रान्ता तर्ह्यहं सदा हस्ताभ्यामुभाभ्यामपि शिङ्गाणमपनयन् श्रान्तो भवेयम् । कथं पुनः सहस्रवदना द्विभुजा त्वं पीनसपीडिता शिङ्गाणापसरणाय नासापीडने प्रभवेः इत्यचिन्तयम्। हासो दुर्वारो बभूव" इति।

रामस्याकैतवेन भाषणेन देवी सन्तुष्टा स्वमनसि अचिन्तयत्, "अबोधो बालको मां प्राकृतैस्तुलयति। यदि मे पीनसं भवेदपि, सत्यं, द्विभुजा न किञ्चित् कर्तुं प्रभवेयम्" इति। सन्तुष्टा सा तमाह "त्वमसि चतुरो धीरश्च अनुग्रहमर्हसि। सर्वान् अच्छलं परिहसन् विनोदनशीलो विकटकविर्भूयाः" इत्यनुजग्राह।

बालस्तु देवीमाह— "मातः अनुगृहीतोऽस्मि। मम विकटेन कामं सर्वे हृष्यन्तु। परन्तु रिक्तः कुटुम्बभरणेऽसमर्थः- निरक्षरः किञ्चिदप्यजानानः - कथमात्मनि तुष्येयम्" इति। अतिसरलेन अस्य अर्भकस्वभावेन वशीकृता देवी तस्मै विद्यां श्रियमुभयं चानुगृहीतुं ऐच्छत्। द्वयोर्हस्तयोः चषकद्वयं दधाना तमुवाच— "बालक ! अयं दक्षिणहस्ते ज्ञानाणुभिः मिश्रितेन दुग्धेन संभृतः चषकः। इतो वामहस्ते ऐश्वर्याणुभिर्मिलितेन दध्ना पूर्णः चषकः। द्वयोरेकं (एकतरं) वृणीष्व" इति।

"कथमनास्वाद्य वृणुयाम् ?" इति वदन्नेव रामः तस्याः हस्ताभ्यां चषकद्वयमादाय निमेषार्धेन निःशेषं पीत्वा उज्जगार। देवी च तस्य वैदग्ध्यमजानन्तीव तमाह— "साधु वत्स साधु ! निपुणोऽसि। ज्ञानमैश्वर्यञ्च एकपदे प्राप्तवान्। किन्तु जनास्त्वयि अभ्यसूयेयुः। त्वं पुनः कृच्छ्राणि अतितरिष्यसि" इति।

एवमुक्त्वा देवी तिरोदधे। रामश्च विना श्रमं दिनेनैकेन देवीप्रसादं लब्ध्वा कृतार्थो गृहं प्रतिन्यवर्तत।

கடினபதவுரை:- आसेतोराहिमाचलं ஸேதுவிலிருந்து இமாலயம் வரை, आ - இருந்து, आ – வரை. 2ஆம் வேற்றுமையைத் தழுவும், आततविततं நீண்டு அகன்ற शास्ता ஆள்பவன் अवनतिः தாழ்வு अन्यतम பலவற்றுள் ஒன்று शताब्दी நூற்றாண்டு खण्डहरः இடிபாடு वैदुष्यं विदुषो भावः- கல்வித்திறன்

अनासक्तः ஈடுபடாத शयानः படுத்துக்கொண்டு यथासंभवं சூழ்நிலைக்குத் தக்கவாறு परिश्राम्यत्सु உழைக்கும்போது कर्तव्यपरेषु கடமையில் ஈடுபட்டவர்களாக இருக்கும்போது अभुञ्जानः சாப்பிடாதவன் दयमानः இரக்கம் கொண்டு सन्निहिते அருகிலுள்ள यथाऽऽगतं வந்தபடியே प्रकृत्या, निसर्गतः இயற்கையாகவே प्राङ्गणे மண்டபத்தில் मुण्डमाला துண்டித்த தலைகளை மாலையாக உள்ள अकाण्डे எதிர்பாராமல், திடீரென்று मिश्रित கலந்த मुक्तकण्ठं வாய்விட்டு दुर्ललितः குறும்புக்காரன் बद्धाञ्जलिः கைகூப்பியவன் क्षमस्व பொறுத்துக்கொள் पीनसं ஜலதோஷம் शिङ्गाणं பீளை नासापीडनं மூக்குநோண்டுதல் दुर्वारः தடுக்கமுடியாததாக अकैतवं अच्छलं கபடமில்லாத अबोधः அறியாத प्राकृतः பேதை, உலகிலுள்ளவர் तुलयति ஒப்பிடுகிறான் प्रभवेयं சக்தி உள்ளவளாவேன் कामं ஒப்புக்கொள்கிறேன் रिक्तः வறியவன் आत्मनि என் விஷயத்தில், என்னைப்பற்றி सरल எளிய अर्भकः சிறுவன் चषकं குவளை सम्भृतः நிரப்பப்பட்ட मेलित கலக்கப்பட்ட एकतरं இரண்டில் ஒன்று अनास्वाद्य சுவைக்காமல் उज्जगार ஏப்பம் விட்டான் वैदग्ध्यं திறமை एकपदं ஒரே சமயத்தில் अतितरिष्यसि கடந்துவிடுவாய்.

# त्रयोदशः पाठः

## तेनालिरामः-२

### राजगुरुदर्शनम्

गृहं आगतः रामः मात्रे सर्वं न्यवेदयत्। माता तुतोष। रामो भुक्त्वा पीत्वा देहल्यां शयानः मनसि एवं अचिन्तयत्। 'अयं कुग्रामः। देव्या अनुगृहीतस्य मम नायं उचितः आवासः। अत्र वसन् ग्रामीणान् कथं कियद्वा आराधयेयम्? विजयनगरं राजधानीं गच्छेयम्। तत्र राजसभायां आश्रयं लभेय। तत्रैव मे मतिविकासः सफलो भवेत्समृद्धिश्च। परं तु तत्र

घटकः कश्चन एष्टव्यः। एवं चिन्तयन्नेव दक्षिणानिलेन अपहृतस्मृतिः सुखं सुष्वाप।

प्रातः प्रबुद्धः नित्यं कर्म समाप्य सुहृद्भ्यः स्वं मनोरथं कथयामास। ते तत्र न विश्वासं आपुः। "अपि अयं उन्मत्तः ? ईदृशेषु ग्रामीणेषु नरेषु नागराः कथं अनुरज्येयुः ? किं अयं राजधानीं गन्तुं शक्नुयात् ? राजसभां वा प्रविशेत् ? राजसभां प्रविशन्तं एनं दौवारिकाः गलहस्तिकां दत्वा नूनं अपसारयेयुः। मूर्खस्य अस्य कल्पना महती" इति परस्परं व्याहरन्तः एनं पर्यहसन्। तेषां वचनं संमन्यमानोऽपि स आत्मनो निश्चयान्न विचचाल। "विजयनगरं गच्छेयम् ! को वा अभ्यर्हितः अत्र सहायो भवेत्, येन राजसभां प्रविशेयम्, देव्या अनुग्रहात् श्रेयः प्राप्नुयाम् इति तदेव अभीक्ष्णं चिन्तयन् मनसैव विजयनगरं गच्छन्नागच्छंश्च आसीत्।

दिनानि व्यतीतानि। सः कामपि गुणवतीं रूपवतीं कन्यां पर्यणयत्। तयोरेकः पुत्रोऽपि जातः। दरिद्रः श्रमेण कुटुम्बं निरवहत्।

एकस्मिन्दिने रथ्यायां महान् कोलाहल आसीत्। "कुतः अयं कोलाहलः ?" स जनानपृच्छत्। "विजयनगरतः राजगुरुः आगतः। स मङ्गलगिरिदेवालयं अनेन मार्गेण गच्छति" इति जनेभ्यः अशृणोत्। तस्य मनः प्रमोदपरवशं आसीत्। "कथमपि राजगुरुणा परिचयं सम्पाद्य राजसभां प्रविशेयम्, शुभानि स्वयमेव निकटं आगच्छन्ति। देव्याः प्रसादः इदानीमेव अंकुरति" इति गृणानः राजगुरोरागमनं प्रतीक्षमाणो मार्ग एव अतिष्ठत्।

नचिरात् राजगुरुः तेन मार्गेण मङ्गलगिरिं जगाम। रामः तं अन्वसरत्। मङ्गलगिरिमधावत्। सप्ताहमेकं यावत् देवसेवां निर्वर्तयितुं इच्छन् राजगुरुः मङ्गलगिरावववसत्। देवार्चनं समाप्य पटवासे विश्राम्यन्तं तं रामः कथञ्चित् उपससार। 'मह्यं सेवावसरं दत्वा अनुगृह्णातु' इति प्रार्थयत। रामस्य विनयादिकं पश्यन् गुरुः कस्त्वं ? कुतस्त्यः ? इत्यादि

पप्रच्छ। अपितृकः, दरिद्रः, मातरं कुटुम्बं च कथश्चन पालयामि'' इत्यादि रामो जगाद।

'वरं निरक्षरो लब्धवर्णात्। विनीतः आश्रवः स्यात्' इति मत्वा राजगुरुस्तं शिष्यत्वेन अङ्गीचकार। रामः तं परिचर्यादिना सुतरां अतोषयत्। सप्ताहावसाने राजगुरुः विजयनगरं प्रतिष्ठमान आसीत्। रामः अत्मनो राजसभां प्रवेष्टुं, तत्र नियोगं च लब्धुं स्वकीयां आशां प्रकटयामास। स्वयं अनिच्छन्नपि राजगुरुः तस्मिन् सानुकम्प इव ''अवसरं प्राप्य तुभ्यं सन्देशं प्रेषये। तदा आगच्छ'' इत्युक्त्वा तं विसृज्य विजयनगरं ययौ। रामश्च प्रतिदिनं राजगुरोः सन्देशं प्रतीक्षमाणः ग्रामे कथश्चन कालमनयत्।

கடினபதவுரை:- देहली *இடைக்கழி, ரேழி,* शयानः *படுத்திருப்பவன்.* कुग्रामः *சிறு கிராமம், மதிப்பற்ற கிராமம்.* ग्रामीणः *கிராமவாசி.* आराधयेयं *திருப்திப்படுத்துவேன்.* मतिविकासः *அறிவு வளர்ச்சி.* समृद्धिः *மேன்மை.* घटकः *பொரிசுசெய்பவர், கூட்டிவைப்பவர்.* एष्टव्यः *தேடப்பட வேண்டும்.* प्रबुद्धः *விழித்தெழுந்தவனுக.* नित्यं कर्म *அன்றாடக்கடமை.* नागरः *நகரத்து மனிதன்.* अनुरज्येयुः *நேசம்வைப்பார்கள்.* दौवारिकः *வாயிற்காப்போன்.* गलहस्तिका *கழுத்தில் கைவைத்து நெட்டித்தள்ளுதல்.* व्याहरन् *பேசுபவன்.* पर्यहसन् *பரிகசித்தார்கள்.* संमन्यमानः *ஒத்துக்கொள்பவன்.* विचचाल *அசைந்தான்.* अभ्यर्हितः *பெரியமனிதன். மரியாதை காட்டப் பெற்றவன்.* अभीक्ष्णं *அடிக்கடி.* व्यतीतानि *கடந்தன.* पर्यणयत् *மணந்துகொண்டான்.* निरवहत् *பொறுப்புடன் நிர்வகித்தான்.* रथ्या *வீதி.* प्रमोदः *பெருமகிழ்ச்சி.* निकटं *அருகில்* अंकुरति *முளைவிடுகிறது.* गृणानः *முணுமுணுத்துக்கொண்டவனுக.* अन्वसरत् *பின் தொடர்ந்தான்* निर्वर्तयितुं *நிறைவேற்ற.* पटवासः

டேரா. துணியாலான தங்குமிடம். उपससार நெருங்கினான் सेवावसरः பணி விடைக்கான வாய்ப்பு कुतस्त्यः எந்த ஊரைச்சேர்ந்தவன். निरक्षरः எழுத்தறிவில்லாதவன். लब्धवर्णः கற்றறிந்தவன். आश्रवः சொன்னபடி கேட்பவன். सुतरां நன்றாக. प्रतिष्ठमानः கிளம்புபவராக. नियोगः ஏவல்புரிதல், வேலை. सानुकम्पः பரிவுள்ளவன். अवसरः சந்தர்ப்பம் सन्देशः செய்தி

# चतुर्दशः पाठः

## तेनालिरामः - ३

### विजयनगराय प्रस्थानम् ।

दिनान्यतीताति । राजगुरोः सन्देशो न प्राप्तः । प्रातिवेशिकास्तु "पत्रं प्राप्तं वा ? कदा विजयनगरं यास्यसि ? माऽस्मान् विस्मर" इत्यादिवचनैः तं पर्यहसन् । रामः आत्मानं राजगुरुणा प्रतारितमेव निरचिनोत् । अथापि विजयनगरं प्रस्थातुमेवैच्छत् । कथमपि राजसभायामात्मनः प्रवेशं साधयितुं निरचिनोत् । अनपेक्षितानि आत्मीयानि वस्तूनि विक्रीय मार्गव्ययोचितं धनं समपादयत् ।

शुभे कस्मिंश्चिद् दिने पत्रमागतमिति प्रवदन् स विजयनगरं प्रतस्थे । तद्यथार्थं मन्यमानाः ग्रामीणास्तं सादरं प्रास्थापयन् । मात्रा पत्न्या कुमारेण च सहितः परिमितसम्भारः पादचारेण दीर्घमध्वानमतिलङ्घ्य दिनैः कैश्चित् विजयनगरं आससाद । सायं नगरं प्रविष्टः कचिदन्नसत्रे कृताहारो रात्रिमनैषीत् ।

प्रातः स्नात्वा कर्तव्यमनुष्ठाय कुटुम्बं सत्र एव संस्थाप्य राजगुरुं द्रष्टुं निरगच्छत् । तदा नवरात्रोत्सवः समचलत् । सर्वतोदिशमलंकृतं नगरं जनैः दन्तुरमासीत् । तत इतः पृच्छन् राजवीथीमागतो दूरात् राजगुरोरावासं

महान्तमपश्यत् । विस्मितो मनस्येवमचिन्तयत् । "यदि राजगुरोर्भवनमेतादृशं राजप्रासादः कथं भवेत् ? प्रभावशाली यद्ययं मह्यमुपकुर्यात्, राजसभायां स्थानलाभो भवेदेव" इति चिन्तयन्नेव भवनद्वारमाससाद।

दौवारिकैर्निषिद्धोऽपि लाघवेन तान् वञ्चयित्वा राजगुरुं दृष्ट्वा स्वागमनं तस्मै न्यवेदयत् । अजानन्निव राजगुरुः तं 'कस्त्वम् ? कथमनुमतिं विनोपस्थितोऽसि ?' इति पप्रच्छ । तेनालिरामश्च "किं नाभिजानाति मां मङ्गलगिरौ शिष्यत्वेन परिगृहीतं तेनालिरामम् ? राजसभायां स्थानलाभाय साह्यं प्रतिज्ञाय कथमेवं ब्रवीति भवान् ?" इति प्रत्यवदत्।

राजगुरुस्तु चोरोऽयं गलहस्तिकया निष्कास्यतामिति सेवकान् आदिदेश। अतर्कितमेवं सेवकैर्गलहस्तितो रामः आत्मनो दुर्गतिं मनसा भावयन् प्रतिशोधायावसरं प्रतीक्षमाणोऽन्नसत्रं प्रतिन्यवर्तत।

கடினபதவுரை:- सन्देशः செய்தி. प्रातिवेशिकाः *அயல்வீட்டார்.* प्रतारितः *ஏமாற்றப்பட்டவன்.* निरचिनोत् *தீர்மானித்தான்.* प्रस्थातुं *புறப்பட.* विक्रीय *விற்று.* समपादयत् *சம்பாதித்தான்.* यथार्थं *உண்மை.* परिमितसम्भारः *குறைந்த தளவாடங்கள் உள்ளவனாக.* अतिलङ्घ्य *கடந்து,* आससाद *அணுகினான்.* अनुष्ठाय *செய்து முடித்து.* निरगच्छत् *கிளம்பினான்.* सर्वतोदिशं *நாற்புறமும்.* दन्तुरं *நெரிசலாக.* प्रभावशाली *செல்வாக்கு உள்ள.* दौवारिकः *வாயிற்காப்போன்.* झटिति *சட்டென்று.* उपस्थितः *ஆஜர்ஆனாய் ?* अभिजानाति *அடையாளம் காண்கிறான்.* प्रतिज्ञाय *வாக்குகொடுத்து.* गलहस्तिका *கழுத்தில் கைவைத்து தள்ளுவது.* निष्कास्यतां *வெளியேற்றப்படட்டும்.* अतर्कितं *எதிர்பாராமல்.* गलहस्तितः *கழுத்தில் கை கொடுத்து வெளியேற்றப்பட்ட.* प्रतिशोधः *பழிதீர்த்தல்.*

# पञ्चदशः पाठः

## तेनालिरामः-४

### तेनालिरामस्य राजसभाप्रवेशः ।

परेद्युरपि प्रातः स्नात्वा कृताह्निको रामो राजमन्दिराभिमुखः प्रतस्थे । समृद्धं स्वलंकृतं रक्षिभिः परिवृतं राजभवनं नितरामशोभत । एका वादसभा तत्र प्रस्तुता । विद्वांसो निरीक्षकाश्च सभाङ्गणं प्राविशन् । तेनालिरामोऽपि निरीक्षकैः सह प्रविष्टः आसने समुपाविशत् ।

महाराजः कृष्णदेवरायः सिंहासनमलञ्चकार । विद्वांसो महार्घेष्वासनेषूपविष्टाः । "ब्रह्म सत्यं जगन्मिथ्या" इति वादः प्रस्तुतः । युक्तिप्रतियुक्तिनिरूपणैर्महान् कालो व्यतीतः । कश्चित् वैदेशिको विद्वान् जगन्मिथ्येति सिद्धान्तमस्थापयत् । जगत् सत्यमिति मन्वाना अपि केचित् न प्रतिवादे समर्था आसन् । राजगुरुरपि न किञ्चित् प्रत्यवोचत् ।

निरीक्षकगोष्ठीतः उत्थितो रामो महाराजाय बद्धाञ्जलिः किञ्चिद्विज्ञापयितुमिच्छामि' इत्यवदत् । सर्वे विस्मिताः । राजा "को भवान्? किन्नु विवक्षति ? इतः सभामध्यमेत्य कथयतु" इत्याज्ञापयत् । सविनयं सभां प्रविष्टो रामो राजानं विद्वांसश्चाञ्जलिना सम्भाव्य "अहमस्मि तेनालिग्रामाभिजनः रामः" इत्युक्त्वा विद्वांसमपृच्छत् ।

"स्वामिन् ! यद्वयं जायामहे म्रियामहे, किमेतदसत्यम् ?

"कः सन्देहः ? कल्पितं तत् । शुक्तौ रजतमिव ।

"यद्वयं क्षुधा दूयामहे, भुक्त्वा मोदामहे तत् ?"

"कल्पितमेव"

अथ तेनालिरामः तत्रोपविष्टं राजगुरुमुपेत्य सविनयं पप्रच्छ — 'अत्रभवान् किमभिप्रैति' इति। राजगुरुर्न किञ्चित्प्रत्युवाच।

अथासौ राजानं विलोक्य साञ्जलिः "जितोऽस्मि। दीर्घकालप्रवृत्तेन वादेन सर्वे वयं बुभुक्षिताः। कृपया महाराजः षड्रसोपेतेन भोजनेनास्मान् धिनोतु। एका प्रार्थना। अत्रभवान् विजयी विपश्चित् अग्रस्थाने समुपविष्टो रिक्तं भोजनपात्रं चक्षुषा पश्यन् आत्मनः कल्पितां क्षुधां शमयतु" इति।

सभायां महान् करघोषः समभूत्। सन्तुष्टो राजा तेनालिरामं आस्थानविकटकविं न्ययमयत्। स्वर्णनाणकानां सहस्रेण संभावयामास। सर्वे विस्मिता हृष्टाश्च विनैकं राजगुरुम्। स आत्मन्येव व्यलीयत।

கடினபதவுரை:- परेद्युः, परेद्यवि *மறுநாள்* कृताह्निकः *தினசரிக்கடன்களைத் செய்துவிட்டு* अभिमुखः *எதிர்நோக்கி* समृद्धं *செல்வம் நிறைந்த* रक्षिभिः *காவலாளிகளால்* नितरां *மிகவும்* प्रस्तुता *துவங்கியது* निरीक्षकाः *பார்வையாளர்* अलञ्चकार *அலங்கரித்தார்* महार्घेषु *விலைமிக்க* मिथ्या *பொய்* युक्ति-प्रतियुक्ति- *யுக்திகள், எதிர்யுக்திகள்* व्यतीतः *கழிந்தது* वैदेशिकः *வெளிநாட்டைச் சேர்ந்த* मन्वानाः अपि *நினைக்கின்றவராயினும்* समर्थाः *திறமை உடையவர்கள்* गोष्ठीतः *சபையிலிருந்து* बद्धाञ्जलिः *கைகூப்பியவனாய்* विस्मिताः *ஆச்சரியமடைந்தனர்* विवक्षति *சொல்ல விரும்புகிறீர்* एत्य *வந்து* अंजलिना *கைகூப்புதலால்* सम्भाव्य *மரியாதை செலுத்தி* अभिजनः *பிறப்பிடமாகக் கொண்டவன்* जायामहे *பிறக்கிறோம்* म्रियामहे *இறக்கிறோம்* असत्यं *பொய்* कल्पितं *கற்பனை செய்யப்பட்டது* शुक्तिः *சிப்பி* क्षुधा *பசியால்* दूयामहे *வருந்துகிறோம்* अत्रभवान् *தாங்கள்* अभिप्रैति *அபிப்பிராயப்படுகிறீர்கள்* जितः *வெல்லப்பட்டவன்* बुभुक्षिताः *பசியுடையவர்கள்* षड्रस *அறுசுவை* धिनोतु *மகிழ்விக்க*

வேண்டும் विपश्चित् அறிஞன் अग्रस्थानं முதலிடம் रिक्तं காலியான कल्पितां கற்பனையாலான क्षुधं பசியை करघोषः கைதட்டுதல் न्ययमयत् நியமித்தான் नाणकं நாணயம் आत्मन्येव व्यलीयत தனக்குள்ளேயே அமிழ்ந்து போனார்.

# षोडशः पाठः

## तेनालिरामः - ६

### तेनालिरामेण कृतो वैरप्रतिशोधः

चिराय सम्पन्नमनोरथो रामो राजानं विदुषश्च प्रणम्य लब्धानुज्ञः सत्रं न्यवर्तत। मातरं अनमत्। पत्नीपुत्रावतोषयत्। महाकाल्याः प्रसादं अविरतं मनसा ध्यायन् रात्रिं जाग्रदेवायापयत्। द्वित्रैर्दिनैः राजबीथ्यां गृहमेकं क्रीत्वा तत्र कुटुम्बमावासयत्। अथापि राजगुरोरवमानप्रतीकारप्रकारमेव सदा चिन्तयन् अवसरं प्रत्यैक्षत। तस्य दिनचर्याक्रमं तेभ्यस्तेभ्यो व्यजानात्।

यश्चषदिनानन्तरं गृहालिन्दोपविष्टो रामो यदृच्छया प्रत्यूषे स्नानाय तुङ्गभद्रानदीं गच्छन्तं राजगुरुमपश्यत्। अलक्षितस्तं अनुययौ। गुरुः वस्त्रादिकं तीर एव निवेश्य कौपीनमात्रपरिधानो नदीमवततार। तावता वस्त्रादिकं क्वचित् सङ्गोप्य गुरोः प्रत्यागमं प्रतीक्षमाणः तेनालिरामस्तत्रैवातिष्ठत्। गज इव ह्रदं प्रविष्टो मज्जनोन्मज्जने कुर्वन् चिरात्तीरमारूढो राजगुरुर्वस्त्राभरणादिकं न ददर्श। तेनालिराममेवापश्यत्।

तमेव वस्त्रहरं मत्वा "वत्स तेनालिराम! किं त्वया वस्त्रादिकं मदीयं दृष्टम्?" इति सादरं पप्रच्छ। रामस्तु "श्रीमन् राजगुरो! तस्मिन् दिने गृहागतं मां चोर इति निष्कास्य, कुतोऽद्य स्निग्धं व्यवहरति भवान्? किं वस्त्रमवतार्य स्नातं भवता? अशोभनं किलैतत्" इति सोल्लुण्ठनं प्रत्यवदत्।

महता प्रयत्नेन राजगुरुस्तमसान्त्वयत्। अन्ते "राजकुलं यावत् मां स्कन्धेन वहतु भवान्" इति समयेन रामस्तस्मै वस्त्रादिकं ददौ। तद्वसानो

राजगुरुः स्कन्धेन रामं वहन् अगच्छत्। सर्वे तत् कौतुकादपश्यन्।

क्रमात् तौ राजकुलमासीदताम्। सौधगतः कृष्णदेवरायः पूज्यस्य राजगुरोः स्कन्धारूढं कमपि पुरुषमपश्यत्। न तं अभ्यजानात्। स गुरोस्तादृशं परिभवमसहमानः कुपितः सेवकानाहूय रहसि किमप्यादिशत्। सेवकाः सत्वरं प्रासादादवातरन्।

गुरोः स्कन्धगतः तेनालिरामो दूरादेव तदलक्षयत्। सद्यो राजगुरोः स्कन्धादवततार। पादयोर्निपपात। "क्षन्तव्योऽहं महापराधी मूर्खः। इतः परं यावज्जीवं भवन्तमात्मनः स्कन्धेन वहेयम्। तदेव मे प्रायश्चित्तम्" इति ब्रुवन्नेव तं स्वयं स्कन्धेन वहन् राजकुलमभिजगाम।

तावत्समागता राजभृत्या विना विचारं राजाज्ञामनुसृत्य स्कन्धारूढं राजगुरुं दण्डघट्टनैः चपेटाघातैश्च सम्मर्द्य वाहकं पुरुषं (तेनालिरामं) सोपचारं राजसमीपमानयन्। रामश्च प्रतिशोधः सम्पन्नः इति अन्तः सन्तुष्यन् किमप्यजानान इव राज्ञः समीपं ययौ। "राजिल इत्यवज्ञातो राजनागो बभूव" इति मनसा दूयमानो राजगुरुरुत्थाय निभृतं स्वगृहं निववृते।

கடினபதவுரை:- वैरप्रतिशोधः பழிதீர்த்தல். सम्पन्नः நிறைவேறிய. लब्धानुज्ञः அனுமதிபெற்றவனாக. अविरतं ஓயாமல் जाग्रदेव விழித்துக்கொண்டே. प्रतीकारः எதிர்நடவடிக்கை, பதில் செய்வது. अवसरं प्रत्यैक्षत சமயம் எதிர்பார்த்தான். गृहालिन्दः வீட்டுத்திண்ணை. प्रत्यूषः விடியற்காலை. अलक्षितः காணப்படாமல். कौपीनमात्रपरिधानः கோவணத்தை மட்டுமே ஆடையாகக்கொண்டு. संगोप्य மறைத்து. प्रत्यागमः திரும்பி வருதல். ह्रदः ஓடை. मज्जनोन्मज्जने முழுகி எழுதல். गृहागतं வீட்டுக்கு வந்த. निष्कास्य விரட்டிவிட்டு. स्निग्धं பரிவுடன். अवतार्य களைந்துவிட்டு. अशोभनं அழகானது அல்ல सोल्लुण्ठनं

இடக்காக. असान्त्वयत् சமாதானப்படுத்தினன். समयः நிபந்தனை. वसानः உடுத்திக்கொண்டு. आसीदतां அணுகினார்கள். स्कन्धारूढं தோளின் மீது ஏறிய. न अभ्यजानात् அடையாளம் கண்டுகொள்ளவில்லை. परिभवः அவமானம். आदिशत् கட்டளை இட்டார். अलक्षयत् கண்டுகொண்டான். यावज्जीवं உயிர் உள்ள வரை. दण्डघट्टनं தடியால் மோதுதல். चपेटाघातः கன்னத்தில் அறைதல். राजिलः தண்ணீர்பாம்பு. दूयमानः வருந்திக்கொண்டு.

## सप्तदशः पाठः

## तेनालिरामः ६

### तेनालिरामस्य वधदण्डप्राप्तिः मुक्तिश्च

पुरः स्थितं तेनालिरामं दृष्ट्वा कृष्णदेवरायः 'राजगुरुः कुत्र ? तस्यानयनं किलाज्ञप्तम् ?' इति सेवकावपृच्छत् । तौ भीतभीतौ राजानमूचतुः—देव ! यथाऽऽदिष्टं स्कन्धगतो दण्डितः । वाहक आनीतः'' इति । रामः सविनयमाह - ''महाराज ! सौधे स्थित्वा सेवकावाहूय भवता किमप्याज्ञप्तं इति दूरादपश्यम् । आत्मनोऽपराधं विचिन्त्य सद्यो राजगुरोः स्कन्धादवतीर्य तं स्कन्धे वहन्नगच्छम्'' इति । ''न केवलमनेन राजगुरुरवज्ञातः, दण्डं प्रापितश्च । अतोऽस्य मरणदण्डो विधीयते । अपसारयतमेनम्'' इति राजा सेवकावादिदेश । सेवकौ तं सुदूरमनयताम् । ''परेषामवमानमाकाङ्क्षमाणो मूढोऽहमात्मानमेवा-दण्डयम्'' इति खिद्यन् तेनालिरामस्तावनुययौ । गच्छन्नेव राजगुरोर्दौर्जन्यं वञ्चनां च विवृण्वन् ''दुष्टस्यार्थे साधुरहं दण्डभाक्'' इति प्रत्याय्य ताभ्यां प्रत्येकं दश स्वर्णनाणकानि ददौ ।

उत्कोचप्रलोभितौ तौ गूढं कुत्राप्यपसरेति तं विमुच्य कस्याप्यजशिशोः शिरः छित्वा रक्तदिग्धं खड्गं राज्ञे प्रदर्श्य रामो हतः इत्याहतुः । राजापि तथैवामन्यत ।

निभृतं स्वगृहं प्रविष्टो रामो मात्रे पत्न्यै च वृत्तान्तमावेद्य ते राज्ञः समीपं प्रैषयत्। ते "पुत्रो नष्टः। भर्ता हतः। अल्पेऽपराधे महान् दण्डः" इति राजानं व्यजिज्ञपन्। राजा तु सानुशयः "कृतं कृतमेव" इति समाश्वास्य प्रतिमासं विंशत्स्वर्णदीनारान् दातुमाज्ञापयत्।

तेनालिरामो हत इति वार्ता सर्वतः प्रसृता। ब्रह्महत्या महान् दोषः इति जनाः प्रावदन्। राजा समुचितं प्रायश्चित्तं चिकीर्षुः राजगुरुं पुरोहितांश्च आह्वयत्। चिरं विचार्य 'अकाले मृतस्य पिशाचभूतम्य तस्य श्वोऽमावास्यायां रात्रौ श्मशाने वटवृक्षस्याधः शान्तिपूजा विधेया' इति आदिशत्। राजाज्ञामाक्षेप्तुमसमर्थाः भीता अपि तथैव शान्तिं विधाय "हे पिशाचभूत ! तेनालिराम ! गृहाण" इत्युच्चैरवदन्।

उत्कोचस्निग्धानां राजभृत्यानां मुखात् सर्वं वृत्तान्तं पूर्वमेव ज्ञात्वा वटवक्षे समासीनो रामः कृष्णकम्बलाच्छन्नः सद्यः तेषां पुरतोऽवप्लुत्य तस्थौ। राम एव ब्रह्मराक्षसरूपेणागत इति मत्वा भीतभीता राजगुरुप्रभृतयः सत्वरं निवृत्य राज्ञे न्यवेदयन्। राजापि चिन्तामग्नो बभूव। पिशाचभूतं तेनालिरामं यः शमयेत् तस्मै स्वर्णदीनारसहस्रं दीयेत इत्याघोषयत्।

सप्ताहात् परं लम्बकूर्चो वृद्धः संन्यासी कश्चिद्राजानं द्रष्टुमाययौ। यदि मह्यं एको वरो दीयेत पिशाचं शमयेयमिति स राजानमवदत्। "यदि न महार्घो वरः तर्हि दास्यामि। पिशाचः शमनीयः, ब्रह्महत्यादोषश्चापनेयः" इति राजा प्रत्याह।

" अवश्यम्। तस्य हत्यामेवान्यथयितुं शक्नोमि" वृद्धः प्राह।

"किं तं पुनर्जीवयिष्यसि ?" कृष्णदेवरायः पप्रच्छ।

"यदि तथाऽभिलाषः तदपि साधये" सोऽवदत्।

"महान् सन्तोषः। कृपणो ब्राह्मणः पुनर्जीवतु" राजा जगाद।

"नैतत् शक्यमहं मन्ये। किं वा तस्य पुनर्जीवनेन ? दुर्ललितो विषमं चेष्टेत" राजगुरुर्न्यवेदयत्।

"न तथा। सभा तस्य चेष्टितैः प्रहृष्येत्। भवतु। संन्यासिन् ! किमद्यैव श्मशाने वटवृक्षस्याधः पूजा करिष्यते ?" राजा वृद्धमपृच्छत्।

" न न। इहैव। अधुनैव" वृद्धः प्रत्याह।

"कथं पिशाचस्य राजसभायां पूजा ?" राजगुरुराक्षिपत्।

"तदहं जाने। यदि तेनालिरामो जीवन् सभामानेष्यते, कुतो वटवृक्षस्याधः पिशाचपूजा ?" वृद्धः आवेदयत्।

"किमत्रैवानीयेत ? ब्रह्महत्यादुरितमपि नश्येद्वा ?" राजा विस्मितोऽपृच्छत्।

"नश्येदिति कुतः ? स किल जीवति। हत्यादोषः कथं सम्भवेत् ?" इति वदन्नेव संन्यासी कृत्रिममात्मनः कूर्चमपासारयत्। तेनालिराम एव पुरतः तस्थौ।

राजा राजगुरुश्च विस्मयस्तब्धावभूताम्। तेनालिरामः सर्वं वृत्तान्तमादितो यथावत् निवेद्य सेवकयोः क्षमामेव आत्मनो वरं अवृणोत्। ब्रह्महत्यादोषनिवृत्त्या तुष्टो राजा यथाऽऽघोषितं स्वर्णदीनारसहस्रं दत्वा तेनालिरामं सम्भावयामास।

கடினபதவுரை:- आज्ञप्तम् உத்திரவிடப்பட்டது. यथाऽऽदिष्टं உத்திரவிட்டபடி. स्कन्धगतः தோளிலிருந்தவன். वाहकः சுமப்பவன். अवतीर्य இறங்கி. अवज्ञातः அவமதிக்கப்பட்டான். प्रापितः அடையும் படி செய்யப்பட்டான். अपसारयतं அப்புறப்படுத்துங்கள். आकाङ्क्षमाण. விரும்பியவளுகை. अदण्डयं தண்டித்துக் கொண்டேன். दौर्जन्यं துஷ்டத்தனம் विवृण्वन् விளக்கி

दण्डभाक् தண்டனை பெற்றேன் प्रत्याय्य நம்பவைத்து उत्कोचः லஞ்சம். प्रलोभितौ ஆசை காட்டப்பட்ட. रक्तदिग्धं ரத்தம் பூசப்பட்ட. निभृतं சந்தடியின்றி. व्यजिज्ञपन् விண்ணப்பித்தனர். सानुशयः பச்சாத்தாபமுள்ளவனாக. दीनारः காசு. वार्ता செய்தி. प्रसृता பரவிற்று. चिकीर्षुः செய்யவிரும்பியவனாக. वटवृक्षः ஆலமரம். आक्षेप्तुं ஆக்ஷேபிக்க, மறுக்க. स्निग्धः நட்புக் கொண்ட. कृष्णकम्बलं கருப்புக்கம்பளி. अवप्लुत्य குதித்து. प्रभृतयः முதலானோர். निवृत्त्य திரும்பி. शमयेत् அடக்குவானோ. आघोषयत् பறையறிவித்தான். लम्बकूर्चः தொங்கும் தாடியுடைய. शमयेयं அடக்குவேன். महार्घः விலை அதிகமுடையது. शमनीयः அடக்கப்பட வேண்டும். अपनेयः நீக்கப்படவேண்டும். अन्यथयितुं மாற்றுவதற்கு. जीवयिष्यसि பிழைக்கச்செய்வாய். साधये சாதிப்பேன். दुर्ललितः குறும்புக்காரன். आक्षिपत् ஆக்ஷேபித்தான். कूर्चः தாடி. अपासारयत् அகற்றினான். यथावत् உள்ளபடி. यथाघोषितं பறைசாற்றியபடி.

# अष्टादशः पाठः

# तेनालिरामः-७

## कुतो बन्धोः सुखम् ?

राजकुले तस्य महानादर इति श्रुत्वा कदाचित् रामस्य स्यालो नरसिंहो नाम विजयनगरमागच्छत् । ग्रामीणोऽसौ नगरस्य सौन्दर्यं सम्पत्तिञ्च इदंप्रथमतया दृष्ट्वा नितरां व्यस्मयत । प्रत्यहं सभायामन्वेतुं राजकुलं गत्वा प्रतिनिवर्तमानो रामो विविधानि स्वादिष्ठानि फलानि पारितोषिकाणि च बहून्युपाहरत् । तानि दृष्ट्वा राज्ञः प्रभावं आवुत्तस्य सामर्थ्यं च मनसा मुहुर्मुहुः विभावयन् रामं पप्रच्छ ''कुत एतानि फलानि ?'' इति।

रामो "राजोद्यान एव सर्वे विदेशीयाः फलोपगा वृक्षाः महता प्रयत्नेन रोपिताः। तत एव गृहीत्वा राज्ञा विद्वद्भ्यो मन्त्रिभ्यो महनीयेभ्यश्च वितीर्यते" इत्याह। नरसिंहस्य मुखे चापल्यरेखा स्पष्टा ददृशे । रामः "राजोद्यानं सुरक्षितम्, न केनापि सुखासदम्, मा चापलं कुरुष्व" इति च स्यालमचेतयत्।

अथापि नरसिंहः फललालसः, मध्यरात्रे रक्षिभिरलक्षितः, राजोद्यानं प्रविष्टः, यथाकामं फलान्याहृत्य बुभुजे । अन्ते फलानि बहून्यवचित्य उत्तरीये संगृह्य बहिः निर्गन्तुं इयेष। तावता रक्षकैः सलोप्त्रं गृहीतः, पाशैर्बद्धः राजसमीपं नीतः । राज्ञा च विचार्य रामस्याल इति ज्ञात्वापि "शिष्टां रात्रिं कारायां निक्षिपत। प्रातः मरणेन दण्डयताम्। न विचारणा कार्या" इत्यादिशत्। रक्षिणः तं कारागृहे चिक्षिपुः। वृत्तान्तः सर्वतः प्रासरत्।

रामस्य पत्नी भ्रातरं राज्ञा दण्डितं श्रुत्वा भर्तारमुपरुरोध। स्यालस्य दुश्चरितेन अतीव विषण्णः "राजा अपराधिषु अतीव कर्कशः। अथापि प्रयतिष्ये" इत्युक्त्वा प्रत्यूषे एव राजभवनं जगाम। राजा दूरादेव रामं आगच्छन्तं दृष्ट्वा तस्य मनोभावमनुमेने । अतो दूरादेव सोत्प्रासं "तत्रभवतः तेनालिरामस्य स्वागतम्। परन्तु प्रयासो वृथा। स्यालमुद्दिश्य भवता यत्प्रार्थयिष्यते न तत्संपत्स्यते। तद्विपरीतमेव करिष्यते। अथापि विवक्षितं उच्यताम्" इत्यवदत्।

रामः क्षणं चिन्तामग्नः तस्थौ। अनन्तरमब्रवीत् - "सत्यमाह महाराजः। स्यालः सापराध एव। नीतिश्च निष्पक्षपातं रक्षणीया। अतः प्रार्थये स्यालस्य मरणदण्डो विधीयताम् । "यत् प्रार्थयिष्यते तद्विपरीतमाचरिष्यते" इति प्रतिज्ञायाः पालनं च क्रियताम्।

राजा तेनालिरामस्य चातुर्यं श्लाघमानः स्ववचनपरिपालनाय स्यालं मोचयितुं आदिदेश। सर्वे विस्मिताः। रामः स्यालं गृहमानीय परेद्युरेव तं स्वग्रामं प्रैषयत्।

கடினபதவுரை: ग्रामीणः கிராமவாசி. इदंप्रथमतया இதுவே முதலாக. व्यस्मयत ஆச்சரியப்பட்டான். अन्वेतुं கலந்துகொள்வதற்கு. राजकुलं அரண்மனை. स्वादिष्ठं மிகருசியுள்ள. पारितोषिकाणि பரிசுகள். प्रभावः பெருமை. आवुत्तः சகோதரி புருஷன். फलोपगाः சிறந்த பழம் தருகிற. रोपिताः வளர்க்கப்பட்டன. महनीयं பெருமைபெற்றவன். वितीर्यते வழங்கப்படுகிறது. चापल्यरेखा சபலத்தின் அடையாளம். सुखासदं எளிதில் புகமுடிவது. उत्तरीयं மேலாடை. सलोप्त्रं தடயத்துடன். उपरुरोध நிர்பந்தித்தாள். कर्कशः பிடிவாதமுள்ளவன். अनुमेने அனுமானித்தான். सोत्प्रासं இடக்காக. न संपत्स्यते நிறைவேறாது. विवक्षितं சொல்லவிரும்பியது. परेद्युरेव மறுநாளே.

# एकोनविंशः पाठः

## तेनालिरामः-८

### चरग्रहणम्

एकदा गोलगोण्डातः कश्चित् चरः विजयनगरं आययौ। तस्य यजमानेन आज्ञा दत्ता, कथञ्चित् महाराजस्य कृष्णदेवरायस्य शिरोहरणाय। सः तेनालिरामस्य राजकुले घनिष्ठं परिचयं महान्तं आदरं चावेदीत्। कथञ्चित् तेन आत्मनः सम्बन्धं स्थापयितुं ऐच्छत्। अतः आन्ध्रब्राह्मणवेषं धृत्वा तेनालिरामस्प गृहद्वारं आजगाम। दूरबन्धुरेवाहं इत्यात्मानं आवेदयत्।

तेनालिरामः तं नाभिजज्ञे । आगन्तुकस्य पुनः पुनः एकरूपेण निर्बन्धेन कथञ्चित् प्रतीतः तस्मै स्वगृहे वासं अनुमेने । चरश्च तस्य गृहे बन्धुरिव व्यवहरन् नगरवृत्तान्तं परिज्ञातुं तदा तदा बहिरगच्छत् । रामस्तु तं प्रति शङ्कमानः देवालयोत्सवव्यपदेशेन गृहगतान्सर्वान् बहिरगमयत् । स्वयं पर्यटनेच्छामपदिश्य बहिः ययौ । चरः एकः गृहे अवतस्थे । गृहरक्षकश्च तत्र आसीत् ।

चिराय चरः लब्धान्तरः रक्षकं वञ्चयित्वा तद्धस्तेन रामस्येव कञ्चन लेखं महाराजाय प्राहिणोत् । "अविलम्बेन मद्गृहमागच्छतु महाराजः । तत्र किमप्यद्भुतमालोकयतु इति प्रार्थये ।" इति तत्र लिखितमासीत् । राजापि स्वमनोविनोदाय रामस्य गृहमासाद्य अन्तः प्रविवेश ।

प्रविष्टमात्र एव तस्मिन् चरः खड्गहस्तः यावत् महाराजं प्रहर्तुं प्रववृते, तावत् रामः गृहद्वारमासीदत् । कृष्णदेवरायश्च क्षणात् चरस्य हस्तात् असिं आच्छिनत् । पार्श्वस्थैः जनैः समवेतैः निबद्धः चरः कारामनीयत ।

अथ चरस्य आश्रयो दत्तः इति रामे अभियोगः कृतः । तस्य मरणदण्डश्च राज्ञा विहितः । रामः महाराजस्य चरणयोः निपत्य आत्मानं अनपराधिनं निवेदयामास । आत्मनः दण्डाद्विमोचनं च प्रार्थयामास । "दण्डनियमः अविपर्यास्यः । यादृशं मरणं त्वं वृणोषि, तथा संविधास्ये" इत्याह कृष्णदेवरायः ।

रामः क्षणमात्रं चिन्तापरो बभूव । तस्य मुखं क्षणात्प्रसन्नं व्यराजत । "अहं वर्षीयान् । दण्डकाष्ठमवलम्बितुमपि असमर्थः । अतः मे स्वाभाविकं मरणं वृणे ।" इति सविनयं न्यवेदयत् । सर्वे विस्मिताः । राजापि "अये ! मृत्युं जितवानसि" इति उक्त्वा उच्चैः हसन् तममोचयत् । रामः आदितः सर्वं वृत्तान्तं आवेद्य क्षमामयाचत ।

கடினபதவுரை:- चरः ஒற்றன், வேவுகாரன். घनिष्ठः மிக மிக நெருக்கமான. राजकुलं அரண்மனை. अवेदीत् அறிந்தான். न अभिजज्ञे அடையாளம் புரிந்துகொள்ளவில்லை. आगन्तुकः வெளியிலிருந்து வந்தவன். एकरूपं ஒரேவிதமான. प्रतीतः நம்பியவனாக. अनुमेने அனுமதித்தான். व्यपदेशः சாக்கு. பொய்யான காரணம். अगमयत् செல்லவிட்டான். पर्यटनं சுற்றிவருதல். अपदिश्य சாக்காகக்கூறி-காரணம் காட்டி. लब्ध-अन्तरः சந்தர்ப்பம் பெற்றவனாக. प्राहिणोत् அனுப்பினான். अविलंबेन தாமதமின்றி. प्रववृते முயன்றான். आच्छिनत् பிடுங்கிக்கொண்டான். समवेतः கூடியுள்ளவன். कारा சிறை. आश्रयः இருப்பிடம். அடைக்கலம். अभियोगः குற்றச் சாட்டு. अविपर्यास्यः வேறுவகையில் மாற்ற முடியாதது. वृणोषि தேர்ந்தெடுக்கிறாய். संविधास्ये ஏற்பாடு செய்கிறேன். वर्षीयान् மிக முதுமையடைந்தவன். दण्डकाष्टं தடிக்கம்பு. स्वाभाविकं இயற்கையாக அமைந்த. क्षमा மன்னிப்பு आसीदत् நெருங்கி வந்தான். प्रववृते தொடங்கினான், முயன்றான்.

# विंशः पाठः

# तेनालिरामः-९

## वञ्चकानां वञ्चनेनैव दण्डः ।

राज्ञः कृष्णदेवरायस्य माता वर्षिष्ठा जराजीर्णा च । सा नितरामस्वस्था बभूव । राजवैद्याः श्रद्धया चिकित्सामकुर्वन् । अथापि व्याधिः न शशाम । असाध्यो व्याधिरिति श्रुत्वा राजा चिन्ताक्रान्तो बभूव । "मातः किमपेक्षितं ते करवाणि ?" राजा मातरं पप्रच्छ । माता आम्रफलान्यास्वादयितुमभिललाष । दूता उत्तमोत्तमानि सहकार-फलान्याहर्तुं दुद्रुवुः ।

फलानयनात् पूर्वमेव सा दिवं जगाम। दुःखितो राजा जनन्या और्ध्वदेहिकं श्रद्धया अकरोत्। क्रियान्ते स ब्राह्मणानपृच्छत् "माता ईप्सितान्याम्रफलानि अनास्वाद्यैव ममार। आशा न सम्पन्ना। किमत्र मया कार्यम्" इति। तेऽन्योन्यं विमृश्य प्रोचुः "मृतस्येच्छा दानेन पूर्यते। तथा संविधातुमुचितम्" इति। राजा पुनरपृच्छत्" - कीदृशं दानम्" इति। ते पुनः मिथः सम्मन्त्र्याहुः "महाप्रभो ! आम्रफलानि द्विजेभ्यो देयानि। अथापि यथाविभवं दानं श्रेयस्करं भवेत्। अतः सौवर्णान्याम्रफलानि ब्राह्मणेभ्यो वितीर्णानि मातुरातङ्कं प्रशमयेयुः इति मन्यामहे। ततः परं यथा मन्यते भवान् (भवान् प्रमाणं) इति।

अनन्तरस्मिन् दिने स्वर्णाम्रफलानि द्वादश ब्राह्मणेभ्यो दत्तानि। रामोऽपि तत्र सन्निहितः तेषामर्थाशां नाशयितुं निश्चयमकरोत्।

यदृच्छया कतिपयैरेव दिनैः रामस्य मातापि मृता। रामोऽपि यथाविधि उत्तरक्रियामकारयत्। दानावसरः सम्प्राप्तः। ब्राह्मणाः गृहाङ्गणे समुपविष्टाः। त एव विप्राः ये राजगृहे समाहूताः। रामः तेभ्यः पाद्यमासनमर्घ्यं चन्दनं वस्त्रद्वयं दत्वा "एषोऽहं क्षणादागतः" इत्युक्त्वा महानसं विवेश। तत्र चुल्ल्यां निक्षिप्ताः तप्ताः श्लक्ष्णाः अयःशलाका आदाय तेषां जानुप्रदेशे रेखामाङ्कयत्। उन्मेषनिमेषावकाशे सर्वं सम्पन्नमभूत्। ब्राह्मणाः चुक्रुशुः। रामस्तान् प्रणनाम। ते तु राजानमुपाधावन्। सर्वं वृत्तान्तं तस्मै न्यवेदयन्। राज्ञा आनीतः तेनालिरामः साञ्जलिः "प्रभो ! देवो जानाति यत् मम माता पक्षेऽस्मिन् दिवं जगाम। तस्याः जानुस्तम्भः तदा तदा भवेत्। तदा चैवमेव तप्तायःशलाकास्पर्शो हिताय भवेत्। मरणसमये च स्तब्धिरायाता। यावदहं तप्तां अयःशलाकामानयं तावत् सा ममार। अन्तिमेच्छा न पूरिता। मया दृष्टं राजमातुरिच्छापूर्तये महाराजेन विभवानुरूपं स्वर्णाम्रफलानि वितीर्णानि। दरिद्रः किमहं कुर्याम् ? शलाकाभिरङ्कयित्वा सदक्षिणाः

शलाकाः वितरीतुं मयि यतमान एव एते अत्रागताः। नाहमपराधी। व्रणः स्वल्पः। सप्ताहे विरोपितः स्यात्'' इत्याह।

तेनालिरामस्य इङ्गितं विज्ञाय कृष्णदेवरायो मन्दमस्मयत। ब्राह्मणा लज्जिता निभृतं गृहं जग्मुः।

वैरं निर्यातयितुमिच्छन्तस्ते राजगुरुमेकान्त उपासीदन्। स च लब्धावसरः चिरं विचार्यैवमाह ''भृणुत। वृद्धः अशक्तो राजगुरुः रामं उचितैः संस्कारैः शिष्यं स्वीकरिष्यति। रामं राजगुरुपदे स्थापयिष्यति इति प्रचारं कुरुत। रामो मामुपैष्यति। तं तप्तशङ्खचक्रमुद्राभिरङ्कयेयम्। ततः अनर्होयं इति यूयं घोषयत। वैरप्रतिशोधो भविष्यति। परन्तु मन्त्रोऽतिरहस्यो भवतु'' इति।

पञ्चषेभ्यो दिनेभ्यः परं राजगुरुः सादरं राममाहूय स्वाशयमावेदयत्। अन्तः प्रसन्नोपि रामः सावहित्थं तदङ्गीचकार। गुरुः पञ्चाङ्गं परिशील्य ''परश्वः शुभो मुहूर्तः ।प्रातः स्नात्वा समागच्छ। जपहोमाद्यन्ते यथाविधि दीक्षां दास्यामः। मुद्राङ्कनं कर्तव्यम्। तदपि भविष्यति।'' इत्युक्त्वा तं विससर्ज।

गृहमागतो रामः पत्न्यै वृत्तान्तमकथयत्। सा किमपि छलमुदपश्यत्। रामोऽवहितोऽभवत्। सायं सन्ध्यार्थं नदीं गच्छन्मार्गे वेदिकोपविष्टं तप्तायःशलाकामुद्रितं चिन्ताक्रान्तं रंगेशोपाध्यायमपश्यत्। तमुपसृत्य जानुं दृष्ट्वा ''अये विरोपितो व्रणः। कुतः चिन्ता'' इत्यपृच्छत्। सोऽवदत् ''भद्र! किं करोमि आसन्नप्रसवा जाया। न हस्ते किञ्चित्'' इति।

रामः सद्यः पञ्चस्वर्णदीनारान् तस्मै दत्वा ''निश्चिन्तो धात्रीं आनय। अहमत्रैव तिष्ठामि'' इत्याह। रंगेशः सन्तुष्टो धात्रीमानिनाय। धात्री गृहं विवेश। वेदिकायामुपविवेश रामः, अपृच्छत् ''स्वामिन्! श्रुतं राजगुरोर्गृहं गत्वा युष्माभिः किमपि मन्त्रितमिति। किमधिकृत्य?''

इति । वृश्चिकेन दष्ट इव रंगेशः "न किमपि । न किञ्चित्। मा पृच्छ। मूढः कथयेयमपि यत् न कथनीयम्। कृपयाऽपसरतु भवान्" इत्याह।

रामः "अये ! मा भैः ! रहस्यं चेत् न कथ्यताम्। गृहाण इमानि पञ्च स्वर्णनाणकानि । भार्यापुत्रौ संरक्ष" इत्युक्त्वा गन्तुमारेभे । नाणकप्रलोभितो रंगेशः "एष कथयामि" इति सर्वं वृत्तान्तमुक्त्वा "गुह्यमेतत्। कृपया मा प्रकाशय" इत्युक्त्वा तं विससर्ज।

शुभे दिने रामो राजगुरोः गृहं ययौ। राजगुरुः सादरं तमभिनन्द्य दीनाराणां शतं पीतांबरद्वयं च तस्मै ददौ । रामः पीतांबरं धृत्वा स्वर्णदीनारान् गृहीत्वा वेदिकायामुपविवेश । जपहोमादिकं प्रारब्धम् । अग्निकुण्डस्यान्तः शंखचक्रे नितान्ततप्ते ताम्रवत् अभासेताम्।

रामो वेदिकाया उदतिष्ठत् । दीनाराणां पञ्चाशत् राजगुरोरग्रे स्थापयित्वा "एतावताऽलम्" इत्युक्त्वा क्षणात् राजान्तिकमुपाययौ। रामो राजानमुवाच "महाराज ! राजगुरुः मां शिष्यत्वेन स्वीकृत्य राजगुरुपदवीं दास्यामीत्याह। दीनारशतं पीतंबरे च ददौ। नाहं वैदिको ब्राह्मणः। कथं राजगुरुपदवीमर्हामि ? अतः दीक्षाक्रियाया अर्धं तैः निर्वर्तितमिति पञ्चाशत् प्रत्यर्प्य भवत्समीपमागतः। इमे मां उपरुन्धन्ति" इति।

राजा गुरुमपृच्छत्, किमेतत् सत्यम् ? इति । राजगुरुः सत्यमेवेत्यङ्गीचकार । "कथमस्थाने दीक्षां दातुमिच्छति भवान् । अनुचितमिदं" इत्युक्त्वा रामस्य पदवीवैराग्यं प्रशस्य तस्मै सहस्रं दीनारान् ददौ।

राजगुरुरन्ये च ब्राह्मणाः सापत्रपाः स्वं स्वं गृहं जग्मुः । रामस्तु पञ्चदशपणव्ययेन पञ्चाशदधिकं दीनाराणां सहस्रं मया प्राप्तम् । मातः भद्रकालि ! इति गृणन् स्वगृहं ययौ।

கடின பதவுரை:- वर्षिष्ठा மிகவும் வயதானவள். नितरां மிகவும். न शशाम தணியவில்லை. अपेक्षितं விருப்பம். आस्वादयितुं சுவைக்க. अभिललाष ஆசைப்பட்டாள். सहकारः ஒட்டுமா. दिवं விண்ணுலகத்துக்கு. और्ध्वदैहिकं ஈமச்சடங்கு. अनास्वाद्य சுவைக்காமல். न संपन्ना நிறைவேறவில்லை. विमृश्य ஆலோசித்து. संविधातुं ஏற்பாடு செய்ய. सम्मन्त्र्य ஆலோசித்து. देयानि தானம் செய்யப்பட வேண்டும். अथापि ஆனாலும். यथाविभवं செல்வநிலைக்கேற்ப. आतङ्कः மனக்குறை. अनन्तरस्मिन् அடுத்துவந்த अर्थाशा பண ஆசை. यदृच्छया தற்செயலாக. चुल्ली அடுப்பு. श्लक्ष्ण. வழுவழுப்பான अयः शलाका இரும்பூசி. महानसः சமையலறை. जानुस्तंभः முழங்கால்பிடிப்பு. तप्तायःशलाकास्पर्शः சூட்டுக்கோலால் தொடுவது. अन्तिमेच्छा கடைசி ஆசை. अङ्कयित्वा சூடு போட்டு. वितरीतुं தானம் செய்ய. यतमाने एव முயலும்போதே. विरोपितः ஆறியதாக. इङ्गितं குறிப்பு. निभृतं சந்தடியின்றி. वैरं निर्यातयितुं பழிதீர்க்க. लब्धावसरः சந்தர்ப்பம் பெற்று. संस्कारैः சடங்குகள் மூலம். अंकयेयं சூடிடுவேன். अनर्हः தகாதவன். मन्त्रः யோசனை. स्वाशयं தன் கருத்தை. सावहित्थं உணர்ச்சியை அடக்கிக்கொண்டு. परश्वः நாளை மறு நாள். छलं சூழ்ச்சி. उदपश्यत् எதிர்பார்த்தான். आसन्नप्रसवा பிரசவ வேளை நெருங்கியவள். धात्री மருத்துவச்சி. किमधिकृत्य எதைப் பற்றி ? अपसरतु வெளியே செல்லுங்கள். गुह्यं ரகசியம். अभिनन्द्य கொண்டாடி एतावताऽलं இவ்வளவோடு போதும். अर्हामि தகுதி பெறுவேன். दीक्षाक्रिया தீட்சை சடங்கு. अर्धं பாதி. निर्वर्तितं செய்து முடிக்கப்பட்டது. उपरुन्धन्ति நிர்பந்திக்கிறார்கள். अस्थाने தகாத விஷயத்தில். पदवीवैराग्यं பதவியில் பற்றில்லாமை. गृणन् முணுமுணுத்துக்கொண்டு.

# एकविंशः पाठः

## तेनालिरामः-१०

### शुकस्य पञ्जरान्मुक्तिः

कृष्णदेवरायस्यान्तःपुरे अतिसुन्दरः कश्चन शुको रजत पञ्जरे निरुद्धः आसीत् । राज्ञो राज्ञ्याश्च प्रियोऽसौ परिचरैः उपहृतानि विविधानि स्वादिष्ठानि फलानि यावदपेक्षं भुञ्जानोऽपि पञ्जरबन्धमपि नासहत।

रङ्गेति रामेति माधवेति हर हरेति भगवन्नामान्यध्यापितः, ताभ्यां सूचनां प्राप्तो भगवन्नामानि मधुरमुदचरत् । नितान्तं प्रीतौ तं विशेषेणालालयताम्।

एकदा राज्ञ्याः राज्ञश्च शुकव्याहारेण तृप्यतोः तेनालिरामः आससाद। "कुतोऽयं पञ्जरे बद्धः ?" इति राजानमपृच्छत्। राजा तमाह "अपूर्वो विहगः भगवद्भक्तः, तस्य नामानि मधुरमुच्चरति, न तथा भवानपि उच्चरितुं प्रभवति" इति।

तेनालिरामः शुकं दृष्ट्वा एवमुवाच—

"अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु।<br>
शुक ! पञ्जरबन्धस्ते मधुराणां गिरां फलम्॥"

इति। शुकः तदनुमोदमान इव तं सादरमैक्षत। रामो राजानमाह— "महाराज ! साधारणोऽयं शुकः। नास्य स्वभावे कमपि विशेषं पश्यामि" इति । राजा निराचक्रे । सदा भगवन्नामोच्चरन्नयं शुको विशिष्ट एवेत्युच्चैरवदत्। आत्मनो वादे राज्ञोऽतृप्तिमिव रामः अलक्षयत्।

स यदृच्छया तत्रागतं बिडालमेकमादाय तं शुकस्याग्रे अस्थापयत्। मार्जारं दृष्ट्वैव भीतभीतः शुकः पक्षावुत्क्षिपन् की की इत्याक्रोशत् ।

राज्ञ्या राज्ञा च बहुधा सान्त्व्यमानोऽपि कीरो मृत्युरूपं मार्जारं दर्शं दर्शं आक्रोशत् । राजा तद् दृष्ट्वा रामेण कथितं साधु मेने । रामश्च निर्विशेषेण किमनेन कीरेण इति वदन् पञ्जरमुदघाटयत् । शुकः सानन्दमुदडयत ।

கடினபதவுரை:- रजतपञ्जरः வெள்ளிக்கூண்டு. निरुद्धः அடைக்கப்பட்டது. परिचरः பணியாள். स्वादिष्टः மிகருசியுள்ள. यावदपेक्षं விரும்பியவரை. पञ्जरबन्धः கூண்டில் அடைபடுவது. अध्यापितः கற்பிக்கப்பட்டு. सूचना குறிப்பு. उदचरत् உச்சரித்தது. नितान्तं மிகவும். अलालयतां கொஞ்சினார்கள். व्याहारः பேச்சு. तृप्यतोः மகிழ்ந்துகொண்டிருக்கும் போது. बद्धः அடைக்கப்பட்டது. न प्रभवति முடியாது. स्वच्छन्दचारिषु தன்னிஷ்டப்படி. திரியும்போது. अनुमोदमान इव ஒப்புக்கொள்கின்றது போல். स्वभावे இயற்கையில், निराचक्रे மறுத்தார். विशिष्टः சிறப்புப்பெற்றது. अस्थापयत् நிறுத்தினான். पक्षौ उत्क्षिपन् இறக்கைகளை தூக்கிக் கொண்டு. सान्त्व्यमानोऽपि சமாதானம் செய்யப்பட்ட போதும். दर्शं दर्शं பார்த்துப்பார்த்து. निर्विशेषेण விசேஷமற்ற. कीरः கிளி. उदघाटयत् திறந்துவிட்டான். उदडयत பறந்துசென்றது.

# द्वाविंशः पाठः

## तेनालिरामः-११

### ऐन्द्रजालिकजयः

एकदा दिल्लीतः कश्चिन्मायाजालवित् आजगाम । चतुष्पथे राजमार्गे विपण्यभ्यन्तरे तत्रतत्र विविधं जालं प्रदर्श्य जनान् व्यस्मापयत् । सिकताभ्यः शर्करामुत्पादयामास । गण्डोपलान् रत्नानि पर्यवर्तयत । एकस्मादेव पुष्पात् बहूनां पुष्पाणां आमोदं आघ्रापयत् । दक्षिणहस्तेन आत्मनः शिरः छित्वा वामेन हस्तेन क्षणं उद्गृह्य कायेन पुनः समयोजयत् ।

एकस्मिन् दिने राजसभायामेव जालं प्रदर्शयामास। कोऽन्यो मदधिको भवद्राज्ये वर्तते ? इति महाराजमेव पप्रच्छ।

राजा तस्य दर्पं व्यपनेतुमैच्छत् । उपह्वरे तेनालिराममाहूय स्वाशयमकथयत्। तेनालिरामः ऐन्द्रजालिकं जेष्यामीति प्रतिज्ञां अकरोत् । श्वो राजोद्याने पुनर्जालविद्यां प्रदर्शय इति राज्ञा आज्ञप्तः जालवित् स्वावासमगमत्।

परेद्युः यथासंविहितं स राजसंमुखे विद्यां प्रादर्शयत्। कोऽन्यो मां जेष्यति इति पुनर्घोषयामास । द्रष्टृगोष्ठीं प्रविष्टः ग्रामीणवेषेण प्रच्छन्नः तेनालिरामः आगत्य, ''भो जालविद्यानिपुण ! यदहं वस्त्रपट्टिकया नेत्रे पिधाय करिष्यामि, तत् किं भवान् नेत्रे उन्मील्यापि कर्तुं शक्नोति ?'' इत्यपृच्छत्। ऐन्द्रजालिकः ''कुतो न ? अवश्यं करिष्यामि'' इत्याह।

तेनालिरामः सपदि पट्टिकया नेत्रे आबद्ध्य शयानः उत्तरीयाञ्चले गोपितां मरिच चूर्णपूर्णां भस्त्रिकामादाय नेत्रयोः चूर्णमावर्जयत्। क्षणं तथैव स्थित्वा उत्थाय चूर्णमपास्य पट्टिकां विस्रस्य पुरः स्थितं जालविदं पप्रच्छ ''अधुना भवतः अवसरः। यथा प्रतिज्ञातं नेत्रे उन्मील्य क्रियतां यन्मया कृतम्। इयमन्या भस्त्रिका'' इति। स भीतभीतः तेनालिरामस्य प्रतिभया आत्मानं पराजितमङ्गीकृत्य क्षमामयाचत।

कृष्णदेवरायः प्रमुदितः ऐन्द्रजालिकायापि उचितं पारितोषिकं ददौ । तेनालिरामश्च सहस्रस्वर्णदानेन संभावयामास।

கடினபதவுரை:- मायाजालवित् *மாயாஜாலம் அறிந்தவன்.* चतुष्पथं *நாற்சந்தி.* विपण्यभ्यन्तरे *கடைவீதி இடைவெளியில்.* विपणिः *கடைவீதி,* व्यस्मापयत् *ஆச்சரியப்படவைத்தான்.* सिकता *மணல்.* शर्करा *சர்க்கரை.* गण्डोपलं *கூழாங்கல்.* पर्यवर्तयत् *மாற்றினான்.* आमोदः *நறுமணம்.* आघ्रापयत् *முகரச்செய்தான்.* उद्गृह्य *தூக்கிப்பிடித்து.* समयोजयत् *இணைத்தான்.* मदधिकः *என்னிலும் சிறந்தவன்.* दर्पः *கர்வம்* उपह्वरे *தனிமையில்.* स्वाशयं *தன் கருத்தை.* प्रदर्शय

காண்பிப்பாய். परेद्युः மறுநாள். यथासंविहितं ஏற்பாடு செய்தபடி. द्रष्टा பார்வையாளர். ग्रामीणः கிராமவாசி. वस्त्रपट्टी துணிப்பட்டை. उन्मील्यापि திறந்துகொண்டும். उत्तरीयाञ्चले மேலாடையின் தலைப்பில். भस्त्रिका துணிப்பை. आवर्जयत् கொட்டிக்கொண்டான். अपास्य நீக்கிவிட்டு. विस्रस्य அவிழ்த்து यथाप्रतिज्ञातं உறுதிகூறியபடி. अन्या வேறு. प्रतिभा சமயோசித புத்தி. अङ्गीकृत्य ஒப்புக்கொண்டு. क्षमा மன்னிப்பு. ऐन्द्रजालिकः இந்திரஜாலவித்தை காட்டுபவன். पारितोषिकं பரிசு. संभावयामास கௌரவித்தான்.

# त्रयोविंशःपाठः

## तेनालिरामः-१२

### कठिनस्यापि मार्दवम्।

तेनालिरामस्य यशो दिल्लीं यावत् प्रससार। बाबरः तदा दिल्लीं शशास। समयोचिताचरणे विकटे च अद्वितीयः तेनालिराम इति वार्ता बाबरेण श्रुता। स तेनालिरामं प्रेषयितुं कृष्णदेवरायं पत्रमुखेन आवेदयत्। कृष्णदेवरायः रामस्य कीर्त्या सन्तुष्टोऽपि तमित्थमचेतयत् - "राम! दिल्लीशो बाबरः त्वां दिदृक्षति। लेखः प्राप्तः। यदि त्वं राज्ञा सम्मानितः, सन्तुष्येम। सम्भावितस्य अकीर्तिः मरणादपि शोचनीया। असम्मानितो न मां द्रष्टुमर्हसि" इति। "महाराज! अलं बिभीषिकया। विजयी निवर्तेय" इत्युक्त्वा रामो दिल्लीं प्रतस्थे।

कतिपयैः दिनैः स दिल्लीं प्राप। "रामः आगतः" इति वार्ता बावरस्य कर्णपथं प्राप्ता। स पौरान् प्रकृतिमुख्यान् मन्त्रिणश्च समाहूय "मा कोऽपि तेनालिरामस्य प्रहसनैः आत्मानं विनोदयतु। मा हसतु। मा प्रशंसतु। अस्मदादेशस्य प्रतिकूलमाचरन् दण्ड्येत" इत्यावेदयत्।

तेनालिरामो बाबरस्य सभां प्रविष्टः तं प्रणम्य आत्मनः परिचयं ददौ । तेन सम्मानितः सभायामुपविवेश । तदा तदा परिहासवचनैः विकटैश्च राजानं विनोदयितुं भूयांसं प्रयत्नमकरोत् । राजा अन्ये च सावहित्थं अवर्तन्त ।

निर्विण्णः तेनालिरामः तेषां कपटव्यवहारेण चिन्तां प्रपेदे । सभाया निर्गतः सप्ताहं यावत् सभां न विवेश । महाकालीं मनसा ध्यायन् गूढं अवसत् । "अनापृच्छ्यैव निवृत्तः परिभूतः तेनालिरामः" इति सर्वे अमन्यन्त । सर्वे तं व्यस्मरन् ।

दिनानि बहूनि व्यतीतानि । एकदा बाबरः नगराद्बहिः उद्यानं गन्तुं वीथीमागतः । द्वौ सैनिकौ एकोऽमात्यः कोशाधिकारी इति परिमितः परिवारः तमन्वगच्छत् । राजमार्गमतीत्य उद्यानमासीदन् बाबरः मार्गप्रान्ते कमपि वृद्धं मुसलीममपश्यत् । लम्बकूर्चो जराजीर्णः स वृक्षकमेकं रोपयितुं गर्तं खनन् आसीत् ।

"अयि भो वृद्ध ! किङ्करोषि ?"

"म् ! म् ! इमं तिन्त्रिणीवृक्षकं रोपयितुमिच्छामि ।"

" श्वभ्रखननेन श्रान्तोऽसि । स्विन्नं ते गात्रम् । दीर्घं निश्वसिषि । कुतः पुत्रान् नादिशसि ?

"महाराज ! अनपत्योऽहम् ।"

"तर्हि कस्यार्थे वृक्षं रोपयसि ? किं त्वमेव फलानि भोक्तुमिच्छसि ।"

"नैव"

"तर्हि"

"यः कोऽपि भुङ्क्ताम् । कर्तव्यबुद्धया करोमि ।"

तस्य वार्तया सन्तुष्टो बाबरः धनाध्यक्षमैक्षत । इङ्गितज्ञोऽसो स्वर्णनाणकपूर्णां भस्त्रिकां राज्ञे उपाजहार । राजा वृद्धाय भस्त्रिकां विततार ।

